ग्रावतुल्याः, अहं श्राहर्षस्तु क्षारसमुद्रतुल्य इत्यर्थः। यथा क्षीरसागरो नीरार्थिनोऽपि तीरमात्रस्थान्क्षीरेण तर्पयति। लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, (तथा) मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनं वचनामृतमुत्पद्यते, नान्यकाव्यविचारकस्येति, अन्ये ग्रावतुल्याः, क्षीरोदतुल्यश्चाहमिति भावः॥ १५१॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति, तच्छङ्कामपनुदन् बलदर्पदलनार्थं गुरुसंप्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह—

**ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥ १५२॥**

**ग्रन्थेति**॥ आत्मानं प्राज्ञं मन्यन्तं प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन्काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदंकाव्यस्य पाठकः खलो मा खेलतु 'किमत्रास्ति, अश्रुतमेव व्याकर्तुं शक्यते' इत्यवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीदित्येवमर्थमिह काव्ये क्वचित्क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद्बुद्धिपूर्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिका न्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्वमेवेदं काव्यं मया दुर्बोधं व्यरचि, नतु प्रसन्नकाव्यकरणाशक्त्येत्यर्थः। 'क्वचित्क्वचिदपि'इत्यनेन तत्र तत्र प्रसन्नताप्यस्तीति न काव्यत्वहानिरिति सूच्यते। सज्जनस्य तु ग्रन्थविवेचनोपायमाह—**श्रद्धेति**। श्रद्धया गुरौ दैवतैकबुद्ध्या आराद्धेन पूजितेन गुरुणा पूर्वमश्लथा अपि श्लथाः कृता व्याख्यया सुबोधाः कृता दृढा स्वरूपतो दुर्बोधा ग्रन्थयो यस्मै स गुरुसंप्रदायावगतार्थः, अत एव दर्पराहित्यात्सज्जनः साधुरेतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनमवस्थानं समासादयतु प्राप्नोतु। गुरुपरम्परया विनैकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते, तस्माद्गुरुपरम्पराया एवाध्येयमिदं काव्यमित्यर्थः। यश्चेदं गुरुपरम्पराया अधीते स सततं सुखी भवत्विति महाकविस्तस्मा आशिषं ददाति। अस्मिन्पठिती, 'क्तस्येन्विषयस्य—' (वा० १४८५) इति कर्मणि सप्तमी। आराद्धेति राधेरनुदात्तत्वादिडभावः॥ १५२॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते—

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-**
**द्यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।**
**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥१५३॥**

**ताम्बूलेति**॥ यः कान्यकुब्जेश्वरात्सकाशात्सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनं च लभते। न केवलं राजपूज्य एव, किंतु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते। न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव, किंतु यदीयं काव्यं मधुवर्षि अतिसरसत्वादमृतवर्षि। न परं पूर्वविशेषणविशिष्टोऽतिसरसो महाकविरेव, किंतु

तर्कशास्त्रेष्वपि यस्योक्तयो धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः। तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः कृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्वती सत्याकल्पमतिवृद्धिं प्राप्नुयादित्याशीः। सर्वत्र 'यत्'शब्दनिर्वाहो गुण एव। अभ्युदीयादिति, 'ई गतौ' इत्यस्य रूपम् ॥१५३॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
स्वस्मिन्नेव पथि प्रवर्तनपराः सत्कीर्तयश्चापरे।
अन्ये निस्पृहणाः श्रितश्रुतिपथा दीव्यन्तु भव्याशया
काकन्तः कलहप्रियाः खलजना जीयन्तु जीवन्तु वा ॥

वासनामस्य रामस्य किंकरस्य जगत्पते!।
नो चेत्पूरय, कल्पेशकल्पस्य तव किंकरः ॥

इति श्रीबेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते
नैषधीयप्रकाशे द्वाविंशः सर्गः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभम्



१ 'जै क्षये' इत्यस्य रूपम्।

# नैषधीयचरितस्थश्लोकानां मातृकावर्णक्रमेणानुक्रमणी ।

‡ मूले 'त्वया विधेयाः स गिरो' इति त्वनवधानतयान्यपठितः पाठो मुद्रितः, तत्र च 'त्वया विधेया न गिरो मदर्थाः' इति टीकानुगुणः पाठः पाठ्यः।

ष



स

इति नैषधीयचरितस्थश्लोकानुक्रमणी संपूर्णा ।